# पुरुषोत्तमस्य पुष्पयागः..

तिरुमल
श्रीवेङ्कटेश्वरस्वामिनः आलये
श्रीदेवीभूदेवीभ्यां सहितस्य
श्री स्वामिनः ४-११-२०१९
समाचरितस्य पुष्पयाग
महोत्सव दृशयाणि।















# गीतामृतम्

धृष्टकेतुश्चेकितानः काशिराजश्च वीर्यवान्।
पुरुजित् कुंतिभोजश्च शैब्यश्चनर पुंगवः।।

अस्मिन् पाण्डव पक्षे धृष्टकेतुः चेकितानः काशिराजः पुरुजित् कर्णः, नरश्रेष्ठः शौब्यादयः वीर्यवन्तः अपि सन्ति।

(भगवद्गीता १/५)

# अष्टकम्



कदाचित् कालिन्दीतटविपिनसङ्गीतकरवो
मुदाभीरीनारीवदनकमलास्वादमधुपः।
रमाशम्भुब्रह्मामरपतिगणेशार्चितपदो
जगन्नाथः स्वामी नयनपथगामी भवतु मे।।१।।

(श्री जगद्गुरुशङ्कराचार्यकृत जगन्नाथाष्टकस्य देव व्रती टीका)

जगन्नाथः महाविष्णुः। तस्य अनेक रुपाणि सन्ति। तेषु कृष्णरुपं विलक्षणम्। तेन रुपेण कालिन्दीतीरे वासं चकार। कालिन्दीतीरे गहनवानानि सन्ति। तत्र मुरलीरवं करोति स्म। तेन रवेण तत्रत्याः व्रजाङ्गना आगताः। तासां मुखकमलानि आस्वदते अयं जगन्नाथः। लक्ष्म्या शम्भूना वेधसा इन्द्रेण दिगीशैः पूजितः। सोऽयं जगन्नाथः मम नयनयोः गोचरीभवतु।



# कृष्णं वन्दे जगद्गुरुम्

भगवद्गीता सर्वकालिको प्रामाणिकः ग्रन्थः वर्तते। अस्मिन् ग्रन्थे विश्वजनीसमत्याः, समकालीनोपयुक्तधर्माः बहवः विद्यन्ते। वास्तवे तावत् भगवद्गीतायाः प्रबोधः प्राचीनकाले कुरुक्षेत्रे जातः, तथापि स उपदेशः अनुदिनं मानवहृदयक्षेत्रे रममाणः एव अस्ति। कुरुक्षेत्रः धर्मक्षेत्रः। इन्द्रियरूपी अश्वानां नियन्ता श्रीकृष्णः साक्षात् सर्वान्तर्यामी परमात्मा एव।

भारतीय-आध्यात्मिकसंस्कृतौ कृष्णः एकः गुरुः, परिपूर्णश्च। अर्जुनः शिष्यः, साधकश्च। अयं गुरु-शिष्यसम्प्रदायः एव। अस्मिन् कुरुक्षेत्रे कृष्णः ऐहिकाश्वान् अर्थात् इन्द्रियाणि वशे कृत्वा, आत्मानन्दानुभूयै कारणं तेषां नियन्त्रणमिति स्पष्टीकृतवान्। अक्षरगीता अधुना अस्माकं समीपे उपस्थिता। अयमुपदेशः मानवालि कृते हितोपदेशः इति कारणात् अधुनापि नित्यनूतनतया स्थित्वा मनुष्याणां कामनाः पूर्णीकरोति।

धर्मक्षेत्ररुपी कुरुक्षेत्रे कृष्णेन कृतः गीतोपदेशः आत्मज्ञानसंकलनभाण्डागारः। कुरुराज्ञे ब्रह्मणा अभयं दत्तं यत् ये कुरुक्षेत्रे वीरमरणं प्राप्नुवन्ति ते उन्नतस्वर्गं प्राप्नुवन्तीति। इदमस्ति कुरुक्षेत्रस्य वैशिष्ट्यम्।

सृष्टिप्रारम्भात् भूग्रहे भरतखण्डस्य चारित्र्यमेव महाभारतम्। लक्षश्लोकयुत-महाभारतग्रन्थात् अपरः ग्रन्थः प्रपञ्चसाहित्ये नास्त्येव। कुरुक्षेत्रसंग्रामे कृष्णेन ज्ञापितानां कर्म-भक्ति-ज्ञानयोगानां सार एव भगवद्गीता।

वृत्ति-सामाजिक-आत्मधर्मपरायणः सन् कर्तव्यं स्पष्टयति इयं गीता। कर्तव्यस्य अन्यद्मुखमेव कर्म। फलापेक्षया आचरणमेव मुख्यमिति गीता बोधयति। मानवजन्म इत्युक्ते शरीरधारणं न इति, शरीरमित्युक्ते क्षरमिति, अशाश्वतमिति तस्य साक्षीभूतम् आत्मतत्वमिति गीता प्रबोधयति।

अक्षर-शाश्वत-अमृतस्वरुपमेव आत्मस्वरुपम्। भ्रमान्वितात् दृश्यमानात् योग-ध्यानादि मार्गैः आत्मनः अतीन्द्रियता सुसाध्या इति गीता स्पष्टतया वदति। गुरुशिष्यसंवादरूपेण चैतन्यस्थितेः रहस्यान् सा आविष्कृतवती। कर्मबन्धनेषु अबद्ध्वा मुक्तिं कथं प्राप्नुमः इति गीता स्पष्टीकरोति। सर्वोपनिषदां सारः गीता। योग-धर्म-कर्म-ज्ञान शास्त्रान्, एवञ्च मानवजीवनस्य आनन्दरहस्यम् अर्जुनं निमित्तरुपेण कृत्वा लोकाय समर्पितः ग्रन्थराजः एव गीताग्रन्थः। गीतोपदेशेन श्रीकृष्णः जगद्गुरुः सञ्जातः। गीतायाः आविर्भावपुण्यदिनं प्रत्येकः भारतीयः पुण्यपर्वरूपेण आचरित्वा समस्तसौख्यान् प्राप्नोत्विति आकांक्षा!

*वेङ्कटाद्रिसमं स्थानं*
*ब्रह्माण्डे नास्ति किञ्चन ।*
*वेङ्कटेशसमो देवो*
*न भूतो न भविष्यति ॥*

तिरुमल-तिरुपतिदेवस्थानस्य सचित्रमासपत्रिका

सम्पुटिः-०६ सञ्चिका-०९

# सप्तगिरिः

## डिसेम्बर् २०१९

श्रीविकारिनामसंवत्सरस्य मार्गशिरशुक्ल पंचमि तः पुष्य शुक्ल पंचमि पर्यन्तम् - १९४१



मुखचित्रम् – श्री पद्मावतीदेव्याः पुष्पयाग महोत्सवम्
अन्तिमरक्षापुटः – गोदादेव्यलङ्कारे गोविन्दः





**सङ्केतः**

प्रधानसम्पादकः,
सप्तगिरि, ति.ति.देवस्थानम्,
तिरुपति - ५१७ ५०७.
दूरभाषा - ०८७७ - २२६४५४३, २२६४३५९,
२२६४३६०

सूचनानाम्, आक्षेपाणां च कृते
संपर्कं कुर्वन्तु -
sapthagiri_helpdesk@tirumala.org

एका पत्रिका : रू.५/-
वार्षिकग्राहकत्वम् रू.६०/-

# स्कन्दषष्ठी



- डा. एन्.उमादेवी
चरवाणि - ९९५१७३४४९४

मार्गशीर्षमासस्य प्रधानपर्वदिवसेषु सुब्रह्मण्यषष्ठयाः परिगणनं करणीयमेव। मार्गशीर्ष मासस्य शुक्ल पक्षस्य षष्ठयां तिथौ अस्य पर्वणः आचरणं कुर्वन्ति। शिवपार्वत्योः पुत्राय कुमारः कुमारस्वामी, कार्तिकेयः गुहः स्कन्दः, षण्मुखः सुब्रह्मण्यः इत्यादीनि नामानि वर्तन्ते।

दीनजनानां एकशरणागतिः वल्लीदेवसेना संसेवितपुण्यं पालित भक्ताग्रगण्यं देवताग्रण्यं सुब्रह्मण्यं अहं अभिवादये। देवतानां रक्षणविषये समर्थ सर्वेषां आश्रितजनानां वाञ्छितार्थप्रदाने नैपुण्यं सत्वरजस्तमोगुणानां समतिक्रान्तं देवताग्रण्यं सुब्रह्मण्यं अहं नमामि। भक्तेषु निक्षिप्तकारुण्यं देवतासेवित स्तुत्य नित्ययौवनं मुखविजित चन्द्रलावण्यं देवताग्रण्यं कुमारं अहं नमस्करोमि। पापनाशननैपुण्यं दानवानां शक्तिदहनं, दानवाख्य अरण्यस्य दग्धं, भक्तरक्षणकारुण्यं, देवताग्रण्यं कार्तिकेयं अहं अञ्जलिं करोमि। गणनायकस्य विनायकस्य अनुजं संतापित शतृसमूहं त्वन्मुखकान्त्या तुलितपङ्कजं निर्जितासुरसन्ततिं अग्निसंभवं अहं ईडे। अज्ञानान्धकारस्य नाशकं दुरिताख्य तूलवृक्षस्य (अश्वत्थवृक्षस्य) गन्धभरं पदव्यां स्थितं मदमरासुरनिग्रहं भक्तसुराणां संसारसागरतारकं सर्वदा गुहमहंवन्दे। विज्ञानमूलनिधिंचरणानत भजमान मुनिसमूहं सेवमानानां अमृतवर्षकं नित्यानन्दं मयूरवाहनं शरणं प्रपद्ये।

कार्तिकेयं (दैतेयैः) राक्षसैः असह्यपराक्रमं अमेयशक्तिसम्पन्नं भक्तजन भागधेयं (अदृष्टं) मुनिभिः स्तुत्यंबाहुलेयं अग्निसंभवं अहंप्रणमामि। समर्थतेजसा विजिततारकासुरं सुरनायकं मयूरवाहनं क्रौञ्चग्रावशतारं (क्रौञ्चाख्यपर्वतं वज्रायुधत्वेन धर्तारं) निहतशूरं सुब्रह्मण्यं मानसे भावयामि। योगिपुङ्गवानां आत्मसुखं कृतवन्तं अत्यन्तसंतोषेण युक्तं कुबेरसखं आचरित अश्वमेधशतं (इन्द्रं) स्वतेजसा विजित कमलसखं (सूर्यं) षण्मुखं प्रतिनित्यं हृदये चिन्तयामि।

शरवण भवं अग्निसंभवं हिमवत् पुत्रिकायाः पुत्रं शाशित भवं (संसारं) विध्वस्त संसारसागरं, असदृश सौन्दर्येण मन्दस्मित स्वभाव युक्तं सुब्रह्मण्यं नमामि। अनुरागं प्रदर्शितजनानां दत्त भुक्तिं तपस्संपन्नानां योगीश्वराणां प्रदत्तमोक्षं भक्तजनेषु विहितासक्तिं धृतशक्तिंवल्यां अनुरागं प्रदर्शितं सुब्रह्मण्यं अहं स्तौमि। भवान् द्वन्द्वयुक्तः (संग्रामयुक्तः) न, सौम्यस्वभाव युक्तोपि यत् आनतेषु शतृषु भयंकरः, भक्त्या सेवमानानां च प्रभुः, पापसमूहस्य निबर्हणे (नाशने)उग्रः, भक्त जनानां रक्षणे सौम्यः भवति। भजतां भक्तानां सकलार्ति समूहस्य दूरीकरणेवाञ्छितार्थ समूहस्य वितरणे, भक्तैः भक्त्या विहित स्तोत्रलेशस्य बहूकरणे सकल देवेषु क स्तव समः अस्ति न कोऽप्यस्तीत्यर्थः। हे सुब्रह्मण्य! तत्क्षणं मम पापानि नाशय, मदीयान् सकलान् अभीष्टान् फलवतः कुरु मम चित्ते ज्ञानं प्रकाशय, अवसानदशायां मोक्षसाम्राज्यं प्रयच्छ।

हे सुब्रह्मण्य! त्वां यः मानवः चरणयोः नित्यं तुष्ट्या स्तोत्रेण नमस्कारेण च भजते सः इन्द्र सदृश विभवः (ऐश्वर्यसंपन्नः) प्रज्ञायां बृहस्पति तुल्यः अचिरकालेन भवेत्। किमहो! तुभ्यं परमभक्त्या भक्तेषु पत्रमात्राणि समर्पितेषु भूयः तेभ्यः तानिपत्राणि संपत्समृद्धानि प्रददासि। हे सुब्रह्मण्य! कुमारः इत्युक्ते भवानेक एव, स्वामी इत्युक्ते भवानेकएव, सैन्याध्यक्षः इत्युक्ते भवानेक एव। सर्वेषु देवेषु भवानेक एव देवः असदृश शक्तिसम्पन्नः भवान् एको हि विराजते। हे सुब्रह्मण्य त्वं कवित्वशक्ति प्रदायकः एकः, एषः स्तवः नैकप्रासाञ्चितः (अनेकप्रासयुक्तः) तत् प्रीणाति भवानिति प्रासभूयिष्ठः स्तवः मया विरचितः।

श्रीसुब्रह्मण्यस्य परमकरुणया सकलपुरुषार्थान् (धर्मार्थकाममोक्षान्) प्राप्नुयात्। श्रीसुब्रह्मण्यस्य वैदिकसाहित्ये पुराणेषु च बहुधा प्रसिद्धिः वर्तते। श्रीसुब्रह्मण्यस्य महिमा विशेषाः वेदमन्त्रेषु स्कान्दादिषु तामसपुराणेषु अष्टोत्तरसहस्रनामस्तोत्रेषु च बहुधा कीर्तिताः दृश्यन्ते।





# गीताजयन्ति

तेलुगु मूलम् - डा।। वैष्णवाङ्घ्रि सेवकदासः
आचार्य चक्रवर्ति राघवन्
चरवाणी - ८३०९७३१२५४

मार्गशिरशुद्ध एकादश्यां (डिसेम्बर् - ८) गीताजयन्ति पर्व आगच्छति। सम्पूर्णप्रपञ्चे भगवद्गीतायाः कृते एव आविर्भावोत्सवः क्रियते। इयं गीता साक्षात् भगवद्वाणी। श्रीकृष्णः अर्जुनस्य कृते उपदिष्ट ज्ञानमेव इयंगीता। अस्याः आविर्भाव कारणं किमित्युक्तौ अत्र विद्यमान विजयः, ऐश्वर्यम्, असाधारण शक्तिः, प्रधानतया अस्मिन् ग्रन्थे प्रतिपादिताः नीतयः याः वर्तन्ते तान् विशेषान् यदि लोकेभ्यः अर्पयामः, तेन प्रभाविताः जनाः गीतायाः विषये अभिमानं प्रदर्शयन्ति! सम्पूर्ण प्रपञ्चे सर्वे विजयाकांक्षिणः भवन्ति। किन्तु केचन एव विजय सिद्धिः भविष्यतीति लपन्ति। अस्यां गीतायां तु भिन्न मत्या अर्जुनः ''राज्यसुखं मास्तु'' -- विजयः मास्तु'' इति विजयपराङ्मुखेन दृश्यते। किन्तु गीतायाः उपदेशमाकर्ण्य पश्चात् विजयमासाद्य विजयी इव प्रसिद्धः जातः। तदर्थं विजय प्रापणाय येन गीतायाः अध्ययनं क्रियते (सः विजयमवश्यं प्राप्स्यति) तेन विजयमवश्यं प्राप्यते इत्यत्र नास्ति संशयः। दश प्रतिशतमेव विजयं प्राप्नोमि इति यः कथयति सः गीतायाः पठनेन शतप्रतिशतम् प्राप्तुं शक्यते। एतादृशीं गरिमां लोकानां मनस्सु विधाय जीवन मार्गदर्शिका भवति। गीता पठेनन विद्यार्थिनः विजेतारः कथं भवन्ति इति तैः ज्ञायते चेत् अवश्यं गीतायाः अभिमानिनः भवन्ति। तेन प्रभावेन मोहः विनश्यति। यदि मोहेन जीवन्ति तेन बुद्धि नाशः भवति। प्रस्तुत विद्यार्थिनः विनय विद्यां विहाय विहार विद्यां प्रति आकार्षिताः भवन्ति खलु ते एव उदाहरण भूताः। यथा अर्जुनः गीताश्रवणेन जागर्ति। तथैव छात्राः अपि गीतायाः श्रवणेन कर्तव्य निष्ठाः भविष्यन्ति। तेन प्रभावेन तेषां सुस्थिरत्वं अचञ्चलत्वं आगत्य जीविकायाः सन्देहान् अपनोद्य कार्य निर्वहणे दक्षाः भविष्यन्ति। यदि सन्देहमनसा तिष्ठन्ति चेत् सन्देहाः एव राक्षसाः भूत्वा पीडयन्ति। एतादृश वाक्यानि अर्जुनः भगवतः मुखात् शृत्वा ''करिष्ये तव वचनं'' इति ब्रवीति। अर्थात् भवता यदुकतं तदवश्यं मयाक्रियते इति निवेदितवान्।

''कृषितो नास्ति दुर्भिक्षम् - कार्ये कृषिः यस्य वर्तते तस्यकृते असाध्यं किमपि नास्ति इत्यर्थः। एवं रुपेण मानवान् सर्वान् कर्तव्य परायणान् कारयितुं गीता आविर्भूता! यदा गीता भिमानिनः प्रधानरुपेण छात्राः भविष्यन्ति ते विजयपरम्परां नूनं आप्नुवन्ति। तदर्थं गीताजयन्ति उत्सवेषु भागं गृहीत्वा गीताभिमानिनो भूत्वा प्रथम प्रयत्ने अल्प प्रयत्ने एव आनन्द मार्गं, अविच्छिन्न मार्गं च अधिरोहन्ति! विजयोऽस्तु।




# वेदेषु विश्व हित चिन्तनम्

- के. श्रावनी रेड्डि
चरवाणी - ७०३६२३५२४९

वेदाः वैदिक वाङ्मयश्च संतप्त प्राणिनां पथ विभ्रमित मानवानां कृते कल्याण पथं प्रशस्यन्ति। मानवमात्रस्य वैयक्तिक सामाजिक पारिवारिक राष्ट्रीय कर्तव्यानां अवबोधनं कारयित्वा तेषां अन्तःकरणे व्याप्तं पारस्परिक वैमनस्यतां नाशयन्ति सौमनस्यम् सौहार्दतांच संचारयन्ति। अखिलमानव जातीनां कल्याणाय विश्वशान्ति प्रतिष्टापनाय च वैदिकवाङ्मयस्य महती विशेषता वर्तते। विश्वहित चिन्तनार्थे वेदेषु अनेकानेक विचाराः मन्त्ररुपेण प्रस्फुटिताः सन्ति।

वैदिक मान्यतानुसारेण प्राणिमात्रस्य कल्याणं तु वैयक्तिक कल्याणस्यापेक्षया उत्तममस्ति अत एव वेदेषु प्राणिमात्रस्य कल्याण विषये विस्तृत चिन्तनं प्राप्यते, न केवलं चिन्तनं अपि तु वैदिक जीवन दर्शनेषु एतत् सार्थक प्रयासमेव दृश्यते ''यत्र विश्वं भवत्येक नीडं'' इत्युद्घोषणा वैदिक साहित्ये सर्वत्र व्याप्तमस्ति यत् सम्पूर्ण विश्वं एकता सूत्रे निबद्धयति। विश्व बन्धुत्वस्य भावनां च प्रसारयति ''अयं निजः परोवेत्ति गणना लघुचेतसां उदार चरितानान्तु वसुधैवकुटुम्बकम्'' परवर्ती साहित्येऽपि एतद् विचारः धारायाः अनुगमनं दृश्यते। यथा उदात्तानां हि लोकोऽयं अखिलोऽहं कुटुम्बकम्। योऽपि विश्व शान्तिं कामयति विश्वहित चिन्तनार्थे यस्य मतिः हृदयं च संलग्नं अस्ति सः उदार भावेन सम्पूर्ण पृथिवीं पश्यति। सर्वेषां प्राणिनां कृते तस्य बुद्धिः अनुरागमयी बान्धव सदृशी भवति। कुटुम्बे सर्वाः सदस्याः बान्धव सदृशाः परस्परं शुभाशुभतां विचिन्तयन्ति तदनुरुपं आचरन्ति। अन्यान् सदस्यानां प्रति अप्रियव्यवहारान् न आचरन्ति। तेनैव प्रकारेण यदि सम्पूर्ण विश्वमेव कुटुम्बः अभवत् तर्हि अप्रिय भाषा अप्रिय कर्म च कुतः स्थानं लभ्यते संसारे। समग्र संसारं तु तदा लोकहित चिन्तनार्थे एव संलग्नो भविष्यति। अत एव वेदेषु प्रोक्तं ''यस्मिन् सर्वाणि भूतान्यात्मैवाभूतविजानत। तत्र को मोहः कः शोकः एकत्वं अनुपश्यतः''॥

वेदेषु संघटनस्य प्रथम सोपानं परिवारं एव कथ्यते। सामाजिकी शान्त्यै समन्वय भावः मैत्री करुणा, क्षमा, दया, संघटनस्य महत्तायाः प्रकाशनम् वेदेषु उपलब्धमस्ति। राष्ट्रीय शान्त्याः कृते राष्ट्रभक्त्याः राष्ट्रप्रेमस्य समाजस्य सम्मान भावस्य प्रकटीकरणम् वेदेषु समुपलभ्यते। तदुपशान्तं समग्र विश्वस्य सम्पूर्ण लोकस्य सर्वेषां प्राणिनां शान्त्यर्थे यजुर्वेदे शान्ति प्रार्थना प्राप्यन्ते। यथा ''दर्योशान्तिः अन्तरिक्ष शान्तिः पृथिवी शान्तिः'' इत्यत्र दयौः, अन्तरिक्षं, पृथिवी, आपः ओषधीः, वनरुपतयः, विश्वदेवाः, ब्रह्मादयः सर्वेषां कृते मानव कल्याणमयी प्रार्थना लभ्यते। वेदेषु प्रायशः सर्वाः प्रार्थनाः बहुवचनेषु प्राप्यन्ते। स्वस्थाने ''नः'' पदस्य प्रधानता दृश्यते। यथा ''यत् भद्रं तन्मआशुवा। अभयं कृणिहि विश्वतो नः। आनो भद्राः क्रतवोयन्ति विश्वतः, धियोयोनः प्रचोदयात्'' इत्यादयः। वैदिक ऋषयस्तु अखिल विश्वजनां मित्रभावेन समान दृष्ट्या अवलोकितुं समग्र सृष्ट्याः कृते आशिषं याचयन्ति। देवतानां समक्षे समस्त प्राणिनां कृते धनधान्ययानां

समृद्धयानां सौख्यं शान्त्या च प्रार्थयन्ति। सर्व कल्याणमयी याचनां च कुर्वन्ति यथोक्तं ''सर्वे भवन्तु सुखिनः सर्वे सन्तु निरामयाः सर्वे भद्राणि पश्यन्ति मा कश्चित् दुःख भागभवेत्''। वैदिक धर्मस्य मौलिक सिद्धातं तु समिष्टि भावना एव। यस्मिन् स्वहितस्यतिरिक्ता अन्येषां प्राणिनां हितस्य विचारोऽपि उक्तम्। सह भावस्य प्रोत्साहनं सर्वोन्नति कामनां च वर्णितमस्ति। यथा ''सहनाववतु सहनौ भुनक्तु सहवीर्यं करवावहै तेजस्विनावधीतमस्तु माविद्विषावहै।'' यदा सर्वेषां विषये चिन्त्यमानाः भवामः तदावयमपि स्वाभाविक रुपेण तेषु सर्वेषु संमिलितो भवामः। तथैव स्वकल्याण प्राप्ति चेष्टाया सह लोककल्याण प्राप्ति चेष्टायां सन्निहितो भवामः। वेदेषु व्याप्ताः स्वस्ति वाचक मन्त्राः एताः जीवन्तोदाहरणः। यथा ''स्वस्तिनः इन्द्रो वृद्धश्रवाः स्वस्तिनः पूषा विश्ववेदाः''। अपिच ''भद्रं कर्णेभिश्रुणुयामदेवाः भद्रं पश्येमाक्षभिर्यजत्राः''। वेदेषु अन्यान्यपि बहूनि सूक्तानि लोक कल्याण चिन्तनार्थे प्रवृत्ताः सन्ति येषु रोगनिवारण सूक्तानि, शान्ति सूक्तानि, ओषधि सूक्तानि इत्यादीनि प्रमुखानि वर्तन्ते। सर्वेषां वैदिक उपदेशानां एकमेव सूत्र वाक्यमस्ति ''आत्मनः प्रतिकूलानि परेषां न समाचरेत्।'' विश्व व्याप्यां सद्भावनायाः कृते इदं सूत्रवाक्यं अवश्यं एव व्यवहर्तव्यम्। यः व्यवहारः स्वस्य कृते अत एव स्वस्य आकलनं कृत्वा अन्यान् प्रति स्व व्यवहारस्य समाचरणं करणीयम्। अस्मिन् विषये ऋगवेदे ''समनीव आकूतिः समाना हृदयानिवः समानमस्तु के मनो यथा वः सुसहासतिः। अत एव वेदोक्त हित चिन्तने सर्वे प्राणिनां विषये समानदृष्टया विचाराः प्राप्यन्ते। सर्वतोन्मुखी विकासस्य परिकल्पनायां अयमेव आधारः। यत्र संगमनं संवदनं संमननं इति त्रिस्तरीय विश्वकल्याणोन्मुखी विचारधारायाः प्रवर्तनम्। सकल विश्वहितार्थे सार्वभौतिक सद्भावनायाः स्थापनार्थे च सर्वधा अनुपालनीयाः स्पृहनीयं च यथोक्तं वेदेषु

**संगच्छध्वं संवदध्वं संवोमनांसि जानताम्।**
**देवाभागं यथा पूर्वे संजनानां उपासते।।**

वस्तुतः वेद शब्द श्रवणात् ऋग्यजुःसामअथर्व संज्ञानां शब्दराशि भूतानां चतुसृणामपि संहितानां बोधः भवति। यद्यपि आपस्तम्बादिभिः वैदिकैः आचार्यैः वेदानां द्विविधं स्वरुपं स्वीक्रियते ''मन्त्रब्राह्मणयोर्वेदानां'' अध्येयम् इति तत्र मन्त्र ब्राह्मणयोर्लक्षणं प्रस्तूयता महर्षिणा जैमिनिना द्वादश लक्षण्यां पूर्व मीमांसायां उक्तं - ''तत्र प्रयोगकालीनार्थस्मरण हेतुतया मन्त्राणां उपयोगः इति वक्ष्यते।

मन्त्रब्राह्मण आत्मकेषु वेदेषु यस्य यज्ञस्वरुपस्य परमात्मनः वर्णनं अस्ति सः परमात्मा मन प्राण वाक् आनन्द किज्ञानमयः अस्तीत्युक्तम् उपनिषदादिषु। अनेन इदं सिद्धयति। यद्वेदेषु सर्वविधं ज्ञान विज्ञानं स्वीकृतेन व्याख्यातमस्ति। तस्मान्मनूक्त वचनमिदं ''सर्व ज्ञानमयो हि सः'' इति साधुरेव। तत्र ज्ञानमिति कथनेन अध्यात्म विद्यया बोधो भवति। यतस्त्वनेकस्मादेकस्मिन्नार हमं ज्ञानं ब्रह्मविद्येत्युच्यते। यत् अस्माकं पूर्वजैः कृष्णाजिनेषु उपविष्टैः सत्यानुसन्धानतत्परैः ऋषिभिः यत् किञ्चित् अवलोकितं तत्सर्वमपि आधुनिकैः नवीनैः अनुसन्धितमिति। अस्य रहस्यस्य उद्घाटनं ऋग्वेदस्य एकेन मन्त्रेण भवति यथा -

''अग्निः पूर्वेभिर्ऋ षिभिरीड्योनूतनैरुत''। सदेवां एह वक्षति। यत् यस्य वस्तुनः पूर्व सन्धानंकृतं स्यात् तस्यैकेदानीं पुनरवलोकनाय अनुसन्धानंक्रियते। शब्दोऽयं वैज्ञानिक भाषायां प्रयुक्तः। तस्माद्वेदेषु वैज्ञानिक विषयाणां विवेचनमस्तीति कथने न कस्यापि विप्रतिपत्तिः।

विज्ञानमिति पदस्य अर्थः भवति विशिष्टं ज्ञानम्। भगवता श्री कृष्णेन अपि उक्तम् - ज्ञानं तेऽहं सविज्ञानं इदं वक्षाम्यशेषतः इति। अर्थात् शिल्प शास्त्रादिषु यदाविष्कारात्मकं ज्ञानं व्यातं तद्विज्ञानपद बोध्यमिति। यद्विश्वमिति कथनेन सर्वेषामपि देव दानव मनुष्य पशु कृमि कीट लता गुल्मवृक्ष वनस्पत्यौषध्यन्नदीनां प्राणख्यात्व संयुक्तानां प्राणि विशेषाणां गणना भवति। तेषां समेषामपि विश्वस्मिन्नव स्थितानां भूत भौतिकानां हितं वेदेषु यज्ञमुखेन निहितं वर्तते। समस्तापि विश्वख्या कल्याणार्थं वेदस्य महत्वपूर्णमवहऽनमस्ति।

निष्कर्षेण वक्तुं शक्यते यद्वेदेषु दयाज्ञानां वर्णनमस्ति। यज्ञाश्च विश्वहित सम्पादने प्रमुख साधनत्वेन वर्णिताः सन्ति। अतः सर्व विधं हितं कल्याणियितुं यज्ञानुष्टानं कर्तव्यम्। न केवलम् मनुष्याः एव देवाः अपि यज्ञानुष्ठाने स्वीयं सर्वविध कल्याणं संपादयन्ति। अतः यज्ञमुखेन वेदाः समस्तस्यापि विश्वस्य हितं सम्पादयन्ति इति कथनं युक्ति युक्तमेव।






# भागवते अंबरीशस्य कथा

- विद्वान् वि.प्रदीप् कुमारः
चरवाणि - ९४९१६४६५३२

पूर्वं कस्मिंश्चित् नगरे ''नाभागः'' इति राजा आसीत्। तस्य पुत्रः अंबरीशः इति। अयं अंबरीशः जन्मना विष्णुभक्तः। सः एकादशयां उपवास प्रभृतीनि आचरणानि कुर्वन् आसीत्। अयं एकदा एकादश्यां तिथौ उपवासं कुर्वन्, सकलैः अवयवैः भगवदाराधनां कुर्वन्नासीत्। उपवासः सफलः भवितुं रात्रौ सः जागरुकः सन् स्वः प्रातः द्वादश्यां तिथौ सर्वेभ्यः बाह्मणेभ्यः दानं दत्वा तान्, सन्तोषमतिस्म। एकदा, पाराणसमये प्रसादार्थं दूर्वासः आगच्छति। सः अंबरीशः तस्मै अतिथिसत्कारान् समर्पयति। अनन्तरं सः मुनिः स्नानार्थं गच्छति। अतिथीनां भोजनानन्तरमेव मम भोजनं भवेदिति मत्वा अंबरीशः ऋषीणां प्रत्यागमनं प्रति समीक्षति। एवं बहुकालं समीक्षणानन्तरं पारणस्य समयाभावभीत्या तत्रस्यात् मुनीन् किं करणीयमधुना इति पृच्छति। तदा ते भोजनं माकरोतु किन्तु जलपानेन पारणं समापयतु इति वदान्ति। तदनुसारं जलपाने अंबरीशः प्रवृत्तः भवति। जल पिबन्तं राजानं दृष्ट्वा दूर्वासः कुपितः सन् स्वकेशेः एकं दानवं निर्माणं कृत्वा तं हन्तुं प्रेषितवान्। तेन भीनः अंबरीशः विष्णुं समाश्रितः। भक्तप्रियः विष्णुः हस्तगतं चक्रं रक्षणार्थं प्रेषयति। स्वामिनः आदेशानुसारं असुरं निहत्य दूर्वासंमपि हन्तुं प्रयनाति। चक्रात् भीतः महर्षिः विष्णुलोकं गत्वा प्रार्थयति। तदा भगवान्नारायणः एवमुक्तवान् - ''कोपेन यं शप्तवान् तमेव प्रार्थयतु इति। तदा मुनिः राजानमाश्रित्य क्षमां याचति। तदा ''नारायणेन क्षम्यतां' इति प्रार्थनेन चक्रं उपसंहति भगवान्विष्णुः। तदनन्तरं आतिभ्यं स्वीकृत्या गच्छति दूर्वास महर्षिः। तेन उपवासोऽपि सफलः अभवन्। अतः कोपेन यत्करोति (अनालोचनया) तत् तस्यैव अपकाराय भवति।







न चोरहार्यम् न च राजहार्यम्,
न भ्रातृभाज्यं न च भारकारी।
व्यये कृते वर्धते एव नित्यं,
विद्याधनं सर्वधन प्रधानम् ।।

ॐ नमो वेङ्कटेशाय

तिरुमलतिरुपतिदेवस्थानम्

# गोविन्दः परमानन्दः

## तिरुमल श्रीवेङ्कटेश्वर स्वामिनः आलये नित्यसेवाः



# गोविन्दः परमानन्दः

## तिरुमल श्रीवेङ्कटेश्वरस्वामिनः आलये नित्यसेवायां

(ति.ति.दे. नमूना आलय आधारेण)


सुप्रभातम्


सुप्रभातम्


नित्यकल्याणम्

## तिरुमलतिरुपतिदेवस्थानम्



तिरुमलक्षेत्रे ९-११-२०१९ दिनाङ्के उदयात्पूर्वं प्रचलित कैशिकद्वादशि महोत्सवः।



अक्टोबर् २४,२५ दिनाङ्कयोः चंद्रगिरि (आं.प्र.चित्तूरु जिल्ला) श्री कोदंडराम स्वामि आलये निर्वहित अष्टबंधन, बालालय महासंप्रोक्षण दृश्याणि।



नवंबर् ७ तः १० पर्यन्तम् देवुनि कडप (आं.प्र, वै.एस्.आर्. कडप जिल्ला) श्री लक्ष्मीवेङ्कटेश्वरस्वामिनः आलये निर्वहित अष्टबंधन महासंप्रोक्षण उत्सवाः



ति.ति.दे. धर्मकर्तृमण्डलि एक्स् अफिषियो सभ्यतया देवादाय धर्मादायशखा कार्यदर्शि श्रीमती वेमूरि उषाराणि महाभागय ऐ.ए.एस्
१०.११.२०१९ दिनाङ्के तिरुमल श्रीस्वामिनः आलये ति.ति.दे. अडिषनल् इ.ओ. श्री धर्मारेड्डि महोदयाः
प्रमाणस्वीकारं कारितवन्तः श्री स्वामिनः, मातुश्च चित्रपटम् प्रदत्तवन्तः।



ति.ति.दे. बडवैद्यशालायां दिव्याङ्गैः सह दीपावली पर्वाचरणे
२८.१०.२०१९ दिनाङ्के भागत्वने ति.ति.दे. जे.इ.ओ. श्री पि. बसंत् कुमार्, ऐ.ए.यस्.,

# गोदादेवी
## तिरुप्पावै तत्त्वम्

तेलुगु मूलम् - डा.परवस्तुकमला
संस्कृतानुवादः - श्री यम्.कामेश्वररावः



''तिरुप्पावै'' इत्याख्यः ग्रन्थः परमपवित्रः अत्युत्तमः द्राविड प्रबन्धः महाविष्णोः अत्यन्त प्रीतिपात्रः च सन् द्राविडवेद रुपेण प्रकीर्त्यते पण्डितैः भक्तजनैश्च तिरुप्पावै इति शब्दस्य अर्थः अयं भवति यत् पवित्रं व्रतम् अथवा सम्पदप्रदायकं व्रतं इति प्रसिद्धिः। ''तिरु'' शब्दस्य श्रीः लक्ष्मीः, सम्पदः, मोक्षः इति च अनेकार्थाः सन्ति।

व्रतमिदं गीतैः सम्पत् सिध्यर्थं कृतम् वा आचरितम् इति कृत्वा ''तिरुप्पावै'' इति प्रथितम्। यथा अनेकानि पुष्पाणि विविधानि एकस्मिन् एव सूत्रे एव ग्रथितानि भवन्तिः, तथैव अस्मिन् व्रते विभिन्नानि गीतानि एकं परमात्मानं विष्णुं उद्दिश्य मालारुपेण ग्रथितानि, लिखितानि च। अत्र ''गोदा'' नाम्नी कन्या गीतानां गानं कुर्वती भक्त्या आनन्दं अनभूतवती। न केवलं गानमात्रेण तत् व्रतम् भवितुं अर्हति वा! एतत्तु एकं संकल्पयशः एव। मनःसंकल्पेन भक्तिप्रपूरितजले स्नानं कृत्वा आनन्दानुभूति नाम्नीं श्रियं गोदादेवी प्राप। व्रताचरणेन मधुरानुभवं अपि सा प्राप्नुवती। एतत्तु साध्यमेव। कथमिति चेत् पूर्वकाले द्वापरयुगे व्रेपल्ले नामके जनपदे गोपिकाः ईदृशीं व्रतम् अकुर्वन् इति भागवतकथाभिः ज्ञायते।

भक्त्या यदि केवलं भगवन्नामसंकीर्त्तनम् कृतं चेत् तर्हि द्राविडवेदः भवितुं कथमर्हति वेदः इत्युक्ते सुस्वरयुतमन्त्रसमुदायः। तत्रापि अनेके भागाः। त्रिंशत्गीतसमाधरः कथं वेदः भवितुम् अर्हतिः वेदाः अनन्ताः। त्रयो वेदाः त्रय अचलाः। तादृशवेदानां ज्ञानं अवगन्तुं अध्येतुं च भरद्वाजमहर्षिः अपि त्रिशताधिकानि संवत्सराणि कृषिम् अकरोत्। सामान्यजनानां एतत् ज्ञानं प्राप्तुं आयुः प्रमाणं कति संवत्सराणि आवश्यकानि स्युः तदर्थमेव उपनिषदां ज्ञानं अवगन्तुं परमात्मनः स्वरुपं अवगन्तुं च तिरुप्पावै उपकरोति। वेदानां उपनिषदा च सारभूत भगवद्गीतासारोऽपि अंसां मालायां उपनिषद्धा। यदि वयं तिरुप्पावै पारायणं कुर्मः तर्हि आत्मविकासः अपि भवति। तमिल भाषा तु द्रविडभाषा। अत एव द्राविडवेदरुपेण सूक्ष्मे मोक्षः जायते।

द्रविडदेशे श्रीविल्लिपुत्तूरु ग्रामे श्रीकृष्णस्य आलयः अस्ति। तत्रैव एकः भक्तः वसति। सः श्रीकृष्णं स्व तुलसीवने स्थित तुलसीमालाभिः पूजयन् अस्ति। तस्य नाम एव विष्णुचित्तः नाम एकः आल्वार्। आल्वार् नाम भक्तः। भगवत् प्रेमसागरे निमग्नाश्च। तस्य तुलसीवने एका बालिका तेन दृष्टा। सः ताम् स्वीकृतवान्। सा एव गोदादेवी। स एव

तस्याः पालनं पोषणं च कृतवान्। साऽपि विष्णुचित्तवत् भक्ता बभूव। द्वापरुयुगकाले गोपिकाः श्रीकृष्णं प्राप्तुं व्रतम् एकम् चक्रुः। प्रस्तुत कलियुगकाले गोदादेवी स्व सखीभिः साकं व्रतम् चकार। नकेवलं व्रताचरणं, परन्तु श्रीरङ्गनाथस्य पादपद्मेषु ततलीना भूत्वा व्रतफलम् अलभत गोदा। सा एव तिरुप्पावै गीतानां गानमपि कृतवती। भक्त्या यदि कृतम् चेत् तर्हि भगवन्तं प्राप्तुंशक्यते इति गोदा निरुपितवती। भगवन्तं प्राप्तुं देश काल भेदः नास्ति। अत एव विष्णुचित्तः ताम् 'आण्डाल्' इति नाम्ना सम्बोधितवान्। सा गोदा मां रक्षितुम् आगता इति सः भावयति स्म। लक्ष्मीदेव्याः अंशेन उद्भूत गोदादेवी महाविष्णौ लीना अभूत्।

इदं व्रतं किमर्थं आण्डाल् महाभागया कृतम्? किमर्थं लक्ष्मीः अस्यां भूमौ जन्म अलभत? किमर्थं सा व्रतम् आचरन् गीतानि गायन्ती स्व जन्म समाप्तिं कृतवती? एतत्सर्वं परमात्मनः संकल्प एव।

श्रीकृष्णावतार समये भगवान् अर्जुनद्वारा सर्वाणि कर्माणि अकारयत्। जीवनां सर्वेषां गीतां उपदिष्टवान्। तथापि तृप्तिं अप्राप्य गोदादेवी रुपे तत् साफल्यं अलभत। अस्य व्रतस्य मुख्यं लक्ष्यम् -

लोककल्याणार्थं सर्वेषां जनानां सुखशान्तिप्राप्यर्थं व्रतं इदं आचरणीयम्। सर्वं भगवते समर्पणं करणीयम्। व्रतं इदम् सौन्दर्यस्वरुपिणः गोपिकाः कृतवत्यः। सौन्दर्यं इत्युक्ते आत्मसौन्दर्यम्। ताऽकिमर्थं श्रीकृष्णं एव किमर्थं आराधयन्ति? भक्ति दास्यप्रदायकः श्रीकृष्णः। सर्वाः गोपिकाः तस्मिन् मार्गे मोक्षं अलभन्त।

अस्य व्रतस्य अचरणेन एताः किम् अलभन्तः?

यादवाः पर इति वाद्यविशेषं ऐच्छन्। अस्य व्रताचरणेन एव गोदा परमात्मनि लीना अभूत्। नीलादेव्याः उन्नतस्तवयोः मध्ये निद्रायमाणं कृष्णतत्तं जागरित्वा स्व मालया बलेन श्रीकृष्णं सबद्ध्वा स्व मोक्षाय वेदोपनिषदपुराणेषु उम्यमान विषयान् निवेद्य सा गोदादेवी आनन्दं अनुभवति। कृष्णानुभव आनन्दं तथैव मोक्षं अपि सा प्राप। तादृशीं गोदाम् अहम् नमामि।

श्रीमद्भागवते यथोदादेव्याः अग्रजस्य पुत्रिका नीलादेवी श्रीकृष्णं परिणीतवती। एषा तु अतिलावण्ययुता। श्रीकृष्णः अस्याः अधीने एव अस्तीति कृत्वा सा नीलादेवी अत्र उदाह्रियते। द्राविडप्रबन्धाः नीलादेवीं नधिन्नपिराहिं इति स्तुवन्ति। एषा तु लक्ष्याः अंशयुता।

श्रीकृष्णं स्व भक्त्या स्व अधीने स्थापिता रुक्मिणी अथवा प्रेम्णा स्वाधीने बद्ध सत्यभामा अपिं अत्र कविना न स्मृता। तर्हि नीलादेवी कथं स्मृता विशेषतः इति अपि एकः संशयः उत्पद्येत।

नीलादेवी नाम का? वेदेषु पञ्चसूक्तेषु नीलासूक्तमपि अस्ति। कृष्णयजुर्वेदे एतत् सूक्तमस्ति।पुरुषसूक्तम् नारायण सूक्तम्, श्रीसूक्तम्, भूसूक्तम्, नीलासूक्तम् च।

परमात्मनः संकल्पशक्त्या विश्वपुरुषः वर्णितः। एतदेव पुरुषसूक्तम् वर्णयति।

समस्तविश्वे समस्तपदार्थेषु विराजमानं नारायणं नारायणसूक्तं वर्णयति। नारायणस्य अधीने तिस्रः जगन्मातरः विराजन्ते। भगवद्गीताया बोधित कर्म-भक्ति ज्ञान योगयुक्तमालिका एव एषा भक्तिमाला। तस्या हस्ते स्ति शुकः आचार्यपदस्य प्रतीकः। ज्ञानं - आचरणं इति च द्वे पक्षे।



अस्य व्रतस्य अन्यत् नाम मार्गशीर्षव्रतम् इति। मार्गशीर्षं वा धनुर्मासः वा इति। मार्गः इति पदस्य अर्थः उपायःइति शीर्ष इत्युक्ते श्रेष्ठः। अयं तु उत्तमः समयः भगवन्तं प्राप्तुम्। श्रीरामः धनुं धृतवान्।

विष्णुः अपि धनुं धृतवान्। ''धनुः'' प्रणवरुपेण, अस्य तु बाणरुपेण। शरीरं तु धनुः इति उपनिषदः वदन्ति। मासानां मार्गशीर्षोऽहं इति भगवान् श्रीकृष्णः गीतायाम् उक्तवान्।

अतः व्रतनियमाः प्रत्येकफलदायिनः। ''तिरुप्पावै'' नामकः ग्रन्थः पारमार्थिकः इति वक्तुं शक्यते।

गोदादेव्याः प्रार्थनाः पराशरभट्टर् महोदयः गोदादेवीं प्रर्थितवान् एवम् नीला...नाश्च श्रीदेवी - भूदेवी नीलादेव्यः च।

संमस्तजीवकोट्यां जाज्वल्यमाना शक्तिः, कान्तिरेव श्रीदेवी। श्रीदेव्यः तत्त्वं श्रीसूक्तं कथयति।

अखिलजीवसमूहस्य जन्मदात्री, कर्मफलत्राता भूदेवी। महाविष्णोः हृदयस्य अधोभागे स्थिता एषा देवी। अस्यां तत्त्वं अधिकृत्य भूसूक्तं बोधयति।

नीलासुक्तम् नीलादेवी अपि ''विष्णोः पत्नी इत्येव उच्यते।

**नीलातत्वम् -** इयं तु समस्त भूतजालं पालयति। स्वर्गलोकस्य आधारभूता। इयं तु ऐश्वर्ययुक्ता अन्नप्रदाता समस्थजगत्याः अधिपतिः भूमिं धरति इति कीर्त्यते। एषा तु इन्द्र अग्नि वायु जलानां अधिपतिः इति ज्ञायते।



(अम्भो दिवो धरुणः पृथिव्याः - नीलासूक्तम्) ऊर्ध्व दिशः प्रतिनिधिः नीलादेवी घृतं, रसद्रव्याणि क्षीरम् इत्यादीनां प्रदात्री इति ज्ञायते। बृहस्पतिरपि अस्याः अधीनं एव भवति। अतः अन्नं शक्तिप्राप्यर्थं अस्याः अनुग्रहः अवश्यः। नीलादेवी परमात्मनः ज्ञानं यच्छन् मोक्षं अपि ददाति।

गोदादेवी भक्तिमाला, कान्तियुक्त दिव्यकङ्कण ध्वनिः-

गोदादेवी भक्तिसुममालारुपेण, सुवर्णकान्तियुतलतारुपेण कीर्त्यते।

**शूडिक्कोडुत्त .... इति पराशरभट्टर् गोदादेवी अस्तुवत्।**

हे भक्ति ज्ञानसौरभान्वित पुष्पमालां धृत्वा अनन्तरं ता मालाम् श्रीरङ्गनाथाय भक्ती समर्पितवती। पूर्वकाले समुत्पन्न दिव्यव्रतं मधुरगीतरुपेण गानं कृत्वा ज्ञानशब्दान् भवती आविष्कृतवती। हे दिव्यकङ्कणधारिणि! यथा वयं श्रीवेङ्कटाचलपतिं प्रार्थयामः भवत्याः श्रेयसे तथैव भवती अस्मभ्यं तत् व्रताचरणभाग्यं प्रसादयतु।

यां मालां गोदा रङ्गनाथाय समर्पितवती, तत् माला भक्ति ज्ञान समन्विता। गोदादेव्याः भक्तिमालायाः शरीरान्तर्गत षट् चक्राणि प्रतीकरुपेण भासन्ते। ज्ञानतत्त्वप्राप्तिरेव स्वर्णलतायाः सङ्केतः। गोदादेव्या गेयमानगीतानि कङ्कणशब्दयुतानि। भक्त्या समर्पित पुष्पमालां धरन् हस्तः विविधकङ्कण ध्वनि युता। हस्तचालनेन कङ्कणानां ध्वनिरपि भविष्यति। हस्ते धार्यमाण कङ्कणानि हृदयस्पन्दन ध्वनि प्रसारकाः। गोदादेव्याः तिरुप्पावै ''दिव्यकङ्कणानां प्रतीकः। वेङ्कटाचलपतिः इत्युक्तेपापनिवारकः इति। अत एव स तु परमात्मस्वरुपः।

**व्रतस्थलम् -** श्रीकृष्णपरमात्मने गोपिकाभिः यत् व्रतं आचरितं तत् कात्यायिनी व्रतम्। गोपिकानां निवासस्थानं व्रेपल्ले। तत्र गवां आधिक्यं वर्तते। वर्षसमृद्धिरपि भवति। सस्यसमृद्धिः अपि अस्ति नीवारधान्यक्षेत्रेषु हंसानां भ्रमणं अपि भवति।

''कात्यायनी' नाम पार्वतीदेवी एव। स्त्रियः सौभाग्याय पार्वतीपूजां कुर्वन्ति। यथा पार्वती शिवे लया अभूत तथैव गोदादेवी श्रीरङ्गनाथे ऐक्यं प्राप्तु ऐच्छत्।

**गोपालः -** गोपिकाः च गाः पालयतीति गोपालः। गोल्ल इत्युक्ते रक्षकः। यादवानां तत्वं निर्मलत्वम्। यादवास्तु प्रणवोपासकाः गोपालकाः वेदपरिरक्षकाः।

''गोपिका'' इत्युक्ते परित्राता इति अर्थः। गोपालकाः गाः रक्षन्ति। गोपिकास्तु दुग्ध-दधि च रक्षन्ति। एते सात्त्विकतत्वप्रवृत्ति आहार पदार्थौ। दधितः वा तक्रतः नवनीतं उत्पद्यते। तदेव परमात्मनः तत्त्वम्। एतत् नवनीतं एवं यज्ञयागादिकर्मसु उपयुज्यते। एतत् कर्म गोपिकाभिः क्रियते। अत एव ताः श्रीकृष्ण तत्त्वं परिरक्षन्ति। गोप्यं इत्युक्ते रहस्यम्। गोपिकाः श्रीकृष्णतत्वं संरक्षन्ति रहस्यरुपेण।

**यमुना नदी -** श्रीकृष्णस्य बाल्यं यमुनानदीसमीपस्थ रेपल्ले प्रदेशे एव सञ्जातम्। ''कृष्ण'' इत्युक्ते कोकिलः काकः, अग्निः मेघाः इत्यपि अर्थाः सन्ति। कोकिलवत् श्रीकृष्णः प्रणवगानं कारयति। सर्वपापान् अग्निवत् भस्मसात्करोति श्रीकृष्णः यदि वयं स्तोत्र कुर्म तर्हि करुणया वर्षति। श्यामवर्णा यमुना श्रीकृष्ण तत्वस्य प्रतीकभूता। मुक्तिप्रदायिका तु व्रेपल्ले। प्रणवसङ्केतः व्रेपल्ले। ''यमुना'' इत्युक्ते पार्वती नदी इति अर्थद्वयमस्ति। नद्यां स्नानं कृत्वा पार्वतीवत्त परमात्मनि लयः भवतु इत्येव गोपिकया कृतं व्रतम्।



**श्रीविल्लिपुत्तूरु -** श्रीविल्लि पुत्तूरु गोदादेव्याः जन्मस्थानम्। सा विष्णुचित्तेन पालिता पोषिता च। विष्णुं सदा चित्ते स्मरतीति कृत्वा विष्णुचित्तः। तस्य सुता गोदा। गोदा शब्दस्य अर्थः अयं भवति यत् वेदेन प्रतिपादित परमात्मनः तत्तम् एव ''गो'' शब्दः। तदेव श्रीतत्त्वम्। विल इत्युक्ते धनुः। पुत्तु इति तमिल शब्दस्य वल्मीकं इति अर्थः। अर्थात् प्रणवशब्दः यत्र समजनि तदेव श्रीविल्लिपूत्तूर् इति नाम्ना व्यवह्रियते। तत् प्रणवशब्दनादं सर्वे जनाः श्रुण्वन्तु। आनन्दं अनुभवन्तु इत्येव गोदादेव्याः उक्तिः। संकल्पश्च।

### अन्नवयल्... पूरितश्रीविल्लिपुत्तूर् पट्टणे

हंसैः युक्त सरस्यक्षेत्र उद्भूता गोदा पाशुरान् मधुरस्वरेण गानं कृत्वा श्रीरङ्गनाथाय तां मालाम् समर्पितवती। तस्मात् एव कारणात् सा शूदिक्कोदुत्त धृता माता अभूत्। सा समस्तजनान् रक्षित इति कृत्वा आण्डाल् नाम्ना प्रसिद्धा।

**श्रीकृष्णःभगवद्गीत-गोदादेवि तिरुप्पावै** भगवान् श्रीकृष्णः कुरुक्षेत्रयुद्धभूमौ सर्वेभ्यः मानवेभ्यः कर्म ज्ञान भक्ति योगानां ज्ञानसिध्यर्थं गीताम् अर्जुनाय उपदिष्टवान्। तथैव गोदा कलियुगे मार्गं एनम् उपदिष्टवती। वेदसारं, उपनिषसारं च स्व गीतैः आविष्कृतवती। गीतायाः ये अंशाः प्रोक्ताः ते सर्वे अंशाः गोदादेव्याः तिरुप्पावै नामके ग्रन्थे उपलभ्यन्ते। भगवतः अवतारविशेषाः धर्मरक्षणं-जीवानां उपरि परमात्मनः अनुरागः इति एते विषयाः स्व ग्रन्थे चर्चिताः।



# गरुत्मान्

यम.यस्.यस्.सुधा
चरवाणी - ९१२१९६९८३८

वैकुण्ठपरंधामस्य श्रीमन्नारायणस्य वाहनं एव गरुत्मान्। अस्य कथा महाभारतस्य आदिपर्वे वर्णितमस्ति। मातृभक्ति मातृसेवा प रायणः गरुडः। मातुः सेवां कृत्वा तस्यै दास्यविमुक्तिं चकार। न मातुः परदैवतम् इति सुभाषितवाक्यस्य सार्थकतां अकल्पयत्।

पूर्वकाले राज्ञः प्रजापतेः कद्रुवा विनता इति पुत्रिकाद्वयं आस्ताम्। तयोः विवाहः कश्यपमहर्षिणा साकं अभूत्। ते अपि आनन्दितौ। एकदा कश्यपः तपं कर्तुम् हिमालयं गच्छन् स्व भार्याद्वयं आहूय उवाच - अहं भवत्योः पतिसेवया अतीव सन्तुष्टः। अतः किमपि वरं वरयतु इति। तयोः विनता तु अतीव बुद्धिशाली विनयसम्पन्ना। परन्तु कद्रुवा अतीव कुटिला ईर्ष्यापूरिता, असूयाग्रस्ता च। सा स्व सहोदर्यां अपि असूयां मात्सर्यं च प्रदर्शयती आस्ते। तादृश दुर्गुणोपेता कद्रवा ''मह्यं शतं पुत्रान् बलशालिनः अनुगृह्णातु इति पतिं अयाचत। विनता तु पुत्रद्वयं सकलसद्गुणोपेतं अत्यन्तबलशालिनं वाञ्छितवती। कश्यपः तथाऽस्तु इति उक्त्वा, हिमालयान् प्रति प्रस्थितः। महर्षेः वाक्प्रभावात् सद्यः शतं अण्डानि कद्रुवायै अण्डद्वयं विनतायै समजनि। परन्तु तेषां विच्छित्तिः बलात् न करणीया ''इति कश्यपः उक्तवान्। गतेषु वत्सरेषु एकस्मिन् दिने कद्रुवायाः अण्डेभ्यः शतं सर्पाः बहिरागताः। सा सन्तोषमवाप। परन्तु विनता निरीक्षणं अकृत्वा औत्सुक्येन एकस्य अण्डस्य छेदनं कृतवती। तदा तस्मात् अण्डात् एकः तेजोमूर्तिः बहिरागत्य स्व मातरं नमस्कृत्य अवदत्। मातः! त्वम् मम अण्डस्य छेदनं बलात् कृतवती। अतः मम ऊरूभंगः आसीत्। अहं अङ्गवैकल्यं प्राप्तवान्। अहं तु गच्छामि। परन्तु मम अनुजः अत्यन्तबलशाली बहिः आगमिष्यति निरीक्षणं करोतु। स एव त्वाम् रक्षिष्यति इति उक्त्वा अन्तर्हितः अनन्तरं अत्यन्त प्रतिभाशाली, बलपराक्रमसम्पन्नः गरुडः समजनि। स एव विनतायाः पुत्रः इति कृत्वा वैनतेयः इतिनाम्ना प्रथां प्राप।

एकदा कद्रुवाविनते सायंकालसमये नदीतीरं प्रति गते। सायं सन्ध्यायाः, प्रकृतेः शोभां च पश्यतः। तदा ते एकं अश्वं दृष्टवत्यौ। झटिति कद्रुवा अस्य अश्वस्य वर्णः कः इति विनतां पृष्टवती। विनता अवदत् अस्य तु वर्णः श्वेतवर्णः। परन्तु कद्रुवा अवदत् अस्य अश्वस्य पुच्छः तु श्यामवर्णः। एवं ते परस्परं विवदमाने अन्ततः एकाम् प्रतिज्ञां स्वीकृतवत्यौ। तदनुसारं यदि कद्रुवा विजेता भविष्यति, तर्हि कद्रुवायाः शतं पुत्राः (सर्पाः) विनतायै दास्यं करिष्यन्ति नो चेत् विनतायाः पुत्रः कद्रुवायै, कद्रुवायाः पुत्रेभ्यः सेवकरुपेण भवितव्यम्'' इति। विनता अपि अङ्गीकृतवती। कुत इति चेत-विनता जानाति तत् अश्वः श्वेतवर्णयुतः इति। परन्तु कुटिला, दुष्टा च कद्रुवा विनतां वञ्चयितुम् निश्चित्य स्व शतपुत्रान् आहूय अन्यस्मिन् दिने ते सर्वे अश्वस्य पुच्छं स्व स्व शरीरैः आवरणं करोतु इति। परन्तु कद्रुवायाः पुत्राः



एतत्तु न उचितम्। अधर्मः इति उक्तवन्तः। तदा कद्रुवा कोपेन तान् सर्वान् आगामि जनमेजयस्य सर्पयागे मरिष्यन्तीति शशाप। परन्तु तस्याः पुत्राः भयकम्पिताः भूत्वा केचन तथा कर्तुं निश्चित्य अन्यस्मिन् दिने सायंसमये अश्वस्य पुच्छम् स्व शरीरैः श्यामवर्णरुपेण कारितवन्तः। यदा विनता - कद्रुवा च तत्र आगते तदा विनता तादृशं अश्वपुच्छं द्रुष्ट्वा आश्चर्यचकिता, खिन्ना च भूत्वा स्व पराजयं अङ्गीकृतवती। अन्ततः विनता कद्रुवायाः सेविका अभूत्। अनन्तरं विनता एकस्य पुत्रस्य माता अभूत्। सं एव वैनतेयः अथवा गरुडः। बाल्यात् प्रभृति एव असौ बलपराक्रमसम्पन्नः भूत्वा विष्णुभक्तः भूत्वा मातुः शिक्षणया विद्यावान् विद्वान् च अभूत्। परन्तु विनता कद्रुवायाः दासी भूत्वा अनेककष्टान् अनुभूय स्व जीवनं यापयति। एतत् सर्वं दृष्ट्वा गरुडः स्व मातरं दास्यवमिुक्तये किम् करणीयम् इति पुष्ट्वा तस्याः आज्ञानुसारं कद्रुवां पृष्टवान्। कोऽपि उपायः अस्ति वा स्व मातुः दास्यविमुक्तये। साऽवदत् कुटिलमत्या भवान् देवलोकात् अमृतभाण्डं आनयतु इति।

तत् श्रुत्वा गरुडः तत् कार्यं कष्टतरं इति ज्ञात्वाऽपि स्व बलपराक्रमैः सर्वान् विजित्य अमृतभाण्डं आनयत्। स्व मातुः विनतायाः दास्यविमुक्तिं कृतवान्। अनन्तरं श्रीमहाविष्णोः वाहनमपि अभूत्। अत एव अद्यापि ब्रह्मोत्सवेषु गरुडोत्सवः अपि अत्यन्तवैभवरुपेण आयोज्यते। महाबलशालिनः गरुडस्य नाम्ना सप्तगिरिषु गरुडाद्रिरपि विराजते। एवं प्रकारेण गरुत्मान् स्व मात्रे महोपकारं कृत्वा - न मातुः परदैवतम् इति शास्त्रवाक्यस्य सार्थकतां आनीतवान्। देवेन्द्रादिमुख्यैः प्रस्तुतः वेदव्यास विरचित अष्टादशपुराणेषु गरुडपुराणमपि विराजते। श्रीमहाविष्णोः वाहनमभूत्।



## ‘सप्तगिरि’ ग्राहकेभ्यः सूचनाः

**सप्तगिरि-मासपत्रिकायाः पाठकेभ्यः प्रतिमासं सकाले प्रापणार्थं नानाविधकार्यान् करोतीति अवगतः विषयः एव। अस्मिन्नेव क्रमे भक्तानां सङ्केतानां क्रमीकरणार्थं प्रयत्नं करोति। पाठकाः एनं विषयं दृष्टौ स्थाप्य अधोनिर्दिष्ट प्रकारेण प्रधानसम्पादकस्य कार्यालयं प्रति सम्पर्कं कुर्वन्तु।**

**१.सप्तगिरि मासपत्रिकायाः सम्बन्धिताः सूचनाः, आक्षेपान् च** sapthagiri.helpdesk@tirumala.org **द्वारा सूचयितुं शक्नुवन्ति।**

**२. सप्तगिरि ग्राहकाः सङ्केतस्य परिवर्तन-सम्बन्धी विवराणां कृते ०८७७-२२६४५४३ दूरवाणीं प्रति स्वीय सम्पूर्णं सङ्केतं, दूरभाषा संख्यया साकं कार्यालयस्य कार्यसमये (प्रातः १०.३० तः सायं ५.०० मध्ये) पुनः ज्ञापयन्तु।**

**३. उपर्युक्त दूरवाणी संख्या द्वारा अथवा** sapthagiri.helpdesk@tirumala.org **द्वारा वा सूचयन्तु।**

**४. अन्तर्जाल (आन्लैन्) ग्राहकाः स्वीय सम्पूर्णं सङ्केतं ति.ति.दे. अन्तर्जालपुटे ज्ञापयन्तु!**



# श्रीपुष्पयागः

- आर्.आञ्जनेयाचार्युलु

चरवाणि - ९४९१३३५७१६

भगवत्प्राप्तये मार्गाः जप, होम, अर्चन, ध्यानादि, भेदैः चत्वारः विद्यन्ते। तेषु अर्चनामार्गः सर्वार्थसाधकः। गृहे वा देवायतने वा वैदिकमार्गेण सुवर्णरजतादि प्रतिमानां कृते या अर्चना क्रिया विहिता सा सर्वार्थसाधकमयी एव। एतदृश गरुत्वपूर्णार्चनं द्विविधं भवति।

आदौ यत् षडासनैः क्रीयमाणं अर्चनकार्यम्। द्वितीयं यथा शिबिका रथरङ्ग, डोला, यन्त्रादि यानैः ननाविधदीपैः नर्तकपरिचारकैः विशेषदिनेषु कालावधिं निर्णाय अर्चनं कुर्वन्ति। अत्र द्वितीयाम् अर्चनामेव आगमपरिभाषायाम् उत्सवः इति मन्यन्ते। उत्सवो नाम उत्कृष्टयज्ञः इत्यर्थः। एतादृशोत्सवः कालश्रद्धनिमित्तभेदैः त्रिविधः भवति। अत्र कालोत्सवो नाम ''द्वादशमासेषु एकस्मिन् मासे अब्दं प्रति नित्यं संकल्प्य यः उत्सवः क्रियते स कालोत्सवः। अस्मिन् कालोत्सवे एव अन्तर्भवति ''पुष्पयागः'' यथा षडासनार्चनायां दोषापनोदनाया पवित्रोत्सवः क्रियते, तथैव उत्सवदोषदूरीकरणाय प्रायश्चित्तरुपेण अयं पुष्पयागः क्रियते। न केवलमुत्सवान्ते अपि च प्रतिष्ठान्ते विशेष पर्वसु, दुःस्वप्न राष्ट्रविभ्रम, दुर्भिक्ष, अनावृष्टि, परयक्रभय, महाव्याधि, पीडनादि सर्वोपद्रवेषु अयं यागः कर्तुं शक्यः। अयं पुष्पयागः शान्तिक, पौष्टिक, काम्यभेदैः त्रिविधः भवति।

**शान्तिकः पौष्टिकः काम्य इति स त्रिविधो भवेत्।**
**प्रातर्मध्याह्नापराह्नेषु क्रमादेनं प्रकल्पयेत्॥**

इति संहितोक्तरित्या प्रातः क्रियते चेत् शान्तिकं, मध्याह्ने क्रीयते चेत् पौष्टिकं यदि अपराह्ने क्रियते चेत् काम्यमिति ब्रुवन्ति।

इदानीं कलापं पश्यामः चेत् पुष्पयागपूर्वरात्रौ अङ्कुरार्पणमाचरन्ति। परस्मिन् दिने प्रातः देवम् आस्थानमण्डपे वा स्नानमण्डपे वा संस्थाप्य शुद्धस्नानोक्तमार्गेण संस्नाप्य नूतनवस्त्राभरणैः विभूषयन्ति। ततः परं देवं विष्टरे संस्थाप्य चतुर्दिक्षु गरुडचक्रपडक्ति विश्वक्सेनेभ्यः पीठान्युपकल्प्य तेषामावाहनमाराधनं तथैव अष्टदिक्पालनाम् अर्चनादिकं कुर्वन्ति। पश्चात् देवस्य पुरतः धान्यपीठे पुष्पाधिपतिमावाह्य उत्सवनिमित्तं यानि पुष्पाणि आवश्यकानि अर्थात्

**पङ्कजं तुलसीबिल्वं करवीरमधोत्पलम्।**
**नन्द्यावर्तश्च कुमुदम् अपामार्गं तथैव च॥**
**विष्णुक्रान्तश्च दूर्वाग्रम् एतान्येव क्रमादूपुनः।**
**मन्दारं चैव पुन्नागं मल्लिकामाधवी तथा॥**
**पाटली केतकी चैव दमनं मरुजालकम्।**
**सुवर्णगन्धपुष्पाणि चान्यन्येकं विविधानिच॥**

इत्युक्तप्रकारेण एतानि पुष्पाणि आनयन्ति। तेषु पुष्पेषु अपि श्वेतवर्णपुष्पाणि शान्तिकराणि। पीतवर्णानि पौष्टिकानि। कृष्णवर्णानि वश्यकराणि इति वदन्ति। पुनः जीर्णपुष्पाणि अशुचिस्थलेजनितानि वर्जनीयानि इति शास्त्रनिश्चयः। पुष्पानयनात्परं सर्वे ऋत्विजाः पञ्चगव्यप्राशनं कुर्वन्ति। ततः परं देवस्य प्रमुखे नृत्य, गेय वाद्यैः दक्षिणे पुराणप्रवचनैः पश्चिमे स्तोत्रपाठैः उत्तरे सूत्रशिक्षादिशास्त्रैः देवं प्रमोदयन्ति। देवस्य दक्षिणभागे आचार्यः, चतुर्दिक्षु चत्वारो ऋत्विजाः स्थित्वा गुह्यातिगुह्यतरं सर्ववेदार्थसारभूतं विष्णुगायत्रीमहामन्त्रं जपन्तः संसारसागरसमुत्तरणोपाय देवदेवस्य पदपल्लवेषु पुष्पाणि अर्पयन्ति। एवं विंशतिपर्यायाः क्रियते चेत् उत्तममिति। पर्यायषोडशं करोति चेत् मध्यममिति पर्यायद्वादशं क्रियते चेत् अधममिति शास्त्रकाराः वदन्ति। अनन्तरं देवाय महाहविः समर्पणं कृत्वा होमकर्म परिसमापयन्ति। पश्चात् नृत्यगेयवाद्यैः आलय प्रदक्षिणं कारयनि। ''उत्सवे अज्ञातदोषानां प्रायश्चित्तमिदं स्मृतम्'' इत्युक्तरित्या उत्सवे सम्मभूत अज्ञातदोषानां कृते प्रायश्चित्त रुपेण अयमुत्सवः कर्तव्यः। एतादृशोत्सवकरणेन फलमित्थमाह।''

**एवं यः कुरुते भक्त्या सर्वान् कामान् अवाप्नुयात्।**
**इहलोके सुखं भुक्त्वा विष्णोः सायुज्यमाप्नुयात्॥**

इति

अर्थात् अमुमुत्सवं भक्त्या श्रद्धया ये आचरन्ति ते इहलोके सुखं भुक्त्वा परलोके विष्णोः सायुज्यमाप्नुवन्ति इति महर्षयः शास्त्रग्रन्थेषु प्रतिपादितवन्तः।



## भक्तसेवायाम्




### तिरुमल तिरुपति देवस्थानम्

१.०९.११.२०१९ दिने मेल्बोर्न् नगरे तिरुमल तिरुपति देवस्थानेन आचरित श्रीनिवासकल्याणे ति.ति.दे धर्मकर्तल मण्डलि अध्यक्षाः श्री वै.वि.सुब्बारेड्डि महाभागाः मुख्य अतिथि रुपेण अतिष्ठन्। अस्मिन् सन्दर्भे प्रवदन्तः ते कलियुग प्रत्यक्ष दैवः श्रीनिवासस्य आशिषः मानवानां श्रीरामरक्षा इत्यूचुः। विदेशेषु निवसन्तोऽपि अस्माकं संस्कृती संप्रदायानां संरक्षणं महान् विषय इत्यवदन्। एषा आध्यात्मिक वारसत्व संपद भविष्यज्ञनानां प्रदेर्या इत्यभिलषितवन्तः। पाश्चात्यसंस्कृतेः भिन्नतया तेलुगु भाषायाः औन्नत्यं प्रचारं कुर्वन्तः प्रवासान्ध्र देशीयान् अभिनन्दितवन्तः। तिरुमल तिरुपति देवस्थानेषु क्रियमाणान् विनूत्नान् संस्काशन् विशदीकृतवन्तः।

२. श्रीनिवासकल्याणानि प्रपञ्चे बहुत्र १२.१०.२०१९ दिने सिंगपूरु देशे प्रचलित श्रीनिवास कल्याणे ति.ति.दे. धर्मकर्तल मण्डलि अध्यक्षाः श्री वै.वि.सुब्बारेड्डि महोदयाः धर्मपत्न्या सह भागं गृहीताः। अस्मिन् सन्दर्भे भाषाभाणाः अध्यक्षाः श्रीनिवास कल्याणानि प्रपञ्चे सर्वत्र भक्ति भावेन आचरणेनैव श्री वेङ्कटेश्वर भक्तित्वं अभ्यासे प्रवर्तते इत्यवोचन्।

३. २४.१०.२०१९ दिने तिरुपतिस्य ति.ति.दे. रवाणा विभागे दसरा महोत्सवेषु भागत्वेन आयुधपूजा वैभवेन प्रचलिता। अस्मिन् कार्यक्रमे ति.ति.दे. धर्मकर्तलमण्डलि अध्यक्षाः श्री वै.वि.सुब्बारेड्डि महोदयाः मुख्यातिथि रुपेण आसन्। अस्मिन् सन्दर्भे भाषा भाणाः अध्यक्षाः दसरा पर्वदिनेषु ति.ति.दे. रवाणा विभागे आयुधपूजा निर्वहणं संप्रदायेन प्रचलती यूचुः। भक्तानां विशेष सेवाः प्रददन्तः ति.ति.दे.रवाणा विभागधिकारिभ्यः कर्मचरेभ्यः अस्मिन् सन्दर्भे शुभाकाङ्क्षाः प्रददुः।



Edited and Published on behalf of T.T.Devasthanams by Dr. K.Radharamana, M.A., M.Phil., Ph.D., Chief Editor, T.T.D., and Printed at T.T.D. Press by Sri. R.V. Vijay Kumar, B.A. B.Ed., Dy.E.O., (Publication & Press), T.T.D. Press, Tirupati - 517 507.

## लोकक्षेमाय...

तिरुमलतिरुपतिदेवस्थानम्

# श्रीनिवासमंगापुरम् श्री कल्याणवेङ्कटेश्वर स्वामिनः आलये १६.१०.२०१९ तः १८.१०.२०१९ पर्यन्तम् समाचरितस्य अष्टोत्तरशतकुंडात्मक श्रीनिवास महायाग महोत्सव दृश्यमालिका


















